# बालरामस्तवराज

सनत्कुमारतन्त्र के श्रीपार्वतीजी तथा कार्तिकेयजी के संवाद के रूप में यह बालरामस्तवराज प्राप्त होता है। इसमें बालकरूप में श्रीरामचन्द्रजी की स्तुति है। त्रिकाल सन्ध्याओं में तथा यात्राकाल में इसका पाठ करने का विधान किया गया है। बालरामस्तवराज के पाठ से दुष्टशक्तिओं के प्रभाव, रोग तथा बंधन से मुक्ति की अनुभूति है। एक वर्ष तक पाठ करने से श्रीरामचन्द्रजी की भक्ति की प्राप्ति तथा छः माह तक पाठ करने से ...अर्थात् सरस्वती तथा लक्ष्मीजी की कृपाप्राप्ति के फल का भी इसके माहात्म्य में वर्णन है।

**श्रीकुमार उवाच**

ॐ कैर्मन्त्रैः कैः स्तवनं तस्य पद्मनाभेरजस्य च। केन प्रसन्नतां याति राघव सः उदारधीः ॥१॥

निष्क्रान्तः सर्वविघ्नो हि मातुरंकविनोदकृत्। कर्ता भोक्ता च हन्ता च प्रधानप्रभुरव्ययः॥ २॥

सहायो लक्ष्मणो यस्य वन्दनीयः सुरासुरैः।दिव्ययोषित् सहस्राणां मनोहारी मनोजवः ॥ ३॥

यस्य विज्ञानमात्रेण हन्यते तमसो भ्रमः। विनश्यत्येव सद्यस्तं मातस्त्वं कथयस्व मे ॥ ४ ॥

**श्रीदेव्युवाच**

शृणु वत्स प्रवक्ष्यामि रामस्याद्भुतकर्मणः।स्तोत्रं यत्परमं गुह्यं शंकरेण निरूपितम् ॥ ५ ॥

यच्छ्रुत्वा च पठित्वा च धारयित्वा स्वमस्तके। सर्वसिद्धिमवाप्नोति सर्वत्र विजयी नरः ॥ ६ ॥

देवैरपि दुराधर्षो युद्धकर्मविशारदः। रमावाणीपतिर्भूत्वा चान्ते यान्ति परां गतिम् ॥७॥

**अस्य श्रीबालरामचन्द्रस्तवराजस्य वामदेव ऋषिः अनुष्टुप् छन्दः श्रीबालरामचन्द्रो देवता पुरुषार्थचतुष्टय सिद्ध्यर्थे जपे विनियोगः।**

ॐ नमोस्तु भगवते वासुदेवाय धीमते । नमः शान्ताय कान्ताय राघवाय भवात्मने ॥ ८॥

रामाय विश्वनाथाय केवलाय भवाय च। विज्ञानघनरूपाय मूलकन्दाय विष्णवे ॥ ९॥

केवलानुभवानन्दरूपिणे विश्वधारिणे। प्रज्ञानात्मकरूपाय विश्वरूपाय ते नमः ॥१०॥

श्यामतामरसज्ञाय नमः कालकराय च। वेदान्तवेवैद्यरूपाय कालाधीशाय ते नमः ॥ ११ ॥

लोककर्त्रे लोकहर्त्रे निर्गुणाय परात्मने। मातृणां नयनाह्लाददायिने विश्वमोहिने ॥ १२॥

कौशल्यास्वर्णकुम्भाय स्तनक्षीरप्रमोदिने। पीत्वामृतरसोर्मातृन्वित्त्वेवल्गुहासिने ॥ १३ ॥

प्रांगणे पदसंचारविहार भुविलुंठिने। नितम्बकिङ्कणीनादर्नृत्यते परिवर्तिने ॥ १४ ॥

रत्नमञ्जीरपादाय जानुभ्यां कलगामिने । पितुरंकविहाराय पीतकौशेयवाससे ॥ १५ ॥

वसुधानन्दकन्दाय प्रेमानन्दविहारिणे । परमानन्दसंदोह वक्षो व्याघ्रनख श्रिये ॥ १६॥

भ्रातृभिश्चानुजैर्दिव्यैः क्रीडते बाहुबन्धनैः।वैंकुण्ठनिलयैर्भृत्यैःसेविताङ्घ्रिद्वयाय च ॥ १७ ॥

पञ्चवर्षवयस्काय हरये बालरूपिणे।इत्येतत्कथितं वत्स स्तोत्रं परमाद्भुतम् ॥१८॥

यः पठेत्त्रिषु कालेषु यात्राकाले विशेषतः। सर्वसिद्धिमवाप्नोति वाजपेयफलं लभेत् ॥ १९ ॥

भूतप्रेतपिशाचादि डाकिनीयोगिनीगणः। न बाध्यन्ते कदावापि रामस्तोत्रसमाश्रयात् ॥ २०॥

सुरासुरगणैश्चापि पूज्यते स नरः सदा। रोगार्तो मुच्यते रोगाद् बन्धो मुच्येत बन्धनात् ॥ २१॥

वत्सराज्जायते भक्तिः राघवेऽसुरमर्दिनी । षण्मासात् कविता सिद्धिः लक्ष्मीस्तस्य करेस्थिता ॥२२॥

भुक्तिमुक्ति सदा लग्ने सर्वत्र विजयी भवेत्। सत्यं सत्यं पुनः सत्यं कथितं पुत्रत्वयाग्रतः ॥ २३॥

इति श्रीसनत्कुमारतन्त्रे जननीपुत्रसंवादे श्री बालरामस्तवराज संपूर्णम्।